२२४३१

श्रीः ।

# योगरत्नाकरः ।

श्रीगणेशाय नमः ॥ श्रीधन्वन्तरये नमः ॥ शिवं हरिं विधातारं तत्पत्नीस्तत्सुतान्गुरून् । नत्वा[1] समस्तप्रत्यूहशान्तये मङ्गलाय च ॥ १ ॥ अन्नदो जलदश्चैव आतुरस्य चिकित्सकः । त्रयस्ते स्वर्गमायान्ति विना यज्ञेन भारत ॥ २ ॥ रोगपङ्कार्णवे मग्नं यः समुद्धरते नरम् । कस्तेन न कृतो धर्मः कां च पूजां न सोऽर्हति ॥ ३ ॥ वैद्यः पुरोहितो मन्त्री दैवज्ञश्च चतुर्थकः । द्रष्टव्याः प्रातरेवैते नित्यं श्रेयोविवृद्धये ॥ ४ ॥ गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् । गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥ ५ ॥ ज्यौतिषं व्यवहारं च प्रायश्चित्तं चिकित्सितम् । विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ ६ ॥ क्वचिद्धर्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः । कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ ७ ॥ जन्मान्तरकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरौषधैर्दानैर्जपहोमसुरार्चनैः ॥ ८ ॥ व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः । एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ९ ॥ अग्निमूलं बलं पुंसां रेतोमूलं च जीवितम् । तस्मात्सर्वप्रयत्नेन वह्निं शुक्रं च रक्षयेत् ॥ १० ॥ जातमात्रश्चिकित्स्यस्तु नोपेक्ष्योऽल्पतया गदः । वह्निशस्त्रविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥ ११ ॥ निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनाऽऽयाति हेतुना । दोषैर्मार्गीकृते देहे शेषः सूक्ष्म इवानलः ॥ १२ ॥ यावत्कण्ठगतप्राणस्तावत्कार्या प्रतिक्रिया । कदाचिद्दैवयोगेन दृष्टरिष्टोऽपि जीवति ॥ १३ ॥ यथाशास्त्रं तु निर्णीतो यथाव्याधि चिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः ॥ १४ ॥ पुण्यैश्च भेषजैः शान्तास्ते ज्ञेयाः कर्मदोषजाः । विज्ञेया दोषजास्त्वन्ये केवला वाऽथ संकराः ॥ १५ ॥ औषधं मङ्गलं मन्त्रो ह्यन्याश्च विविधाः क्रियाः । यस्यायुस्तस्य सिध्यन्ति न सिध्यन्ति गतायुषि ॥ १६ ॥ विकारनामाकुशलो न जिह्रीयात्कदाचन । न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ १७ ॥ नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः । अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥ १८ ॥ रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म भिषक्कुर्याज्ज्ञानपूर्वं विचक्षणः ॥ १९ ॥ मूर्खश्चोरस्तथा म्लेच्छो ब्रह्मघ्नो मत्स्यघातकी । द्वेष्टा च ग्रामकूटश्च वञ्चको मांसविक्रयी ॥ २० ॥ एतांस्तु व्याधिना ग्रस्तान्न कुर्याच्छमनक्रियाम् । तेषां जीवासिसंदाता वैद्यो भवति पापभाक् ॥ २१ ॥ दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम् । रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥ २२ ॥

---

१ नत्वा योगरत्नाकरः प्रारभ्यते इत्यर्थः ।

## अथ पादचतुष्टयम् ।

भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् । चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ॥ १ ॥ दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् । बहुकल्पं बहुगुणं संपन्नं योग्यमौषधम् ॥ २ ॥ अनुरक्तः शुचिर्दक्षो बुद्धिमान्परिचारकः । आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥ ३ ॥

## अथ दूतपरीक्षा ।

दूतस्य प्रश्नाक्षरयोगसंख्या त्रिघ्नाऽष्टभाज्या प्रवदन्ति शेषे । समे च मृत्युर्विषमे च नैव विलोक्य वैद्यः खलु प्रश्नकाले ॥ १ ॥ दूतो रक्तकषायकृष्णवसनो दण्डी जटी मुण्डितस्तैलाभ्यक्तवपुर्भयंकरवचा दीनोऽश्रुपूर्णेक्षणः । भस्माङ्गारकपालपाशमुशली सूर्येऽस्तगे व्याकुलो यः शून्यस्वरसंस्थितो गदवतो दूतस्तु कालानलः ॥ २ ॥ स्वज्ञातिः श्वेतवस्त्रो द्रविणयुतकरः क्षत्रियो ब्राह्मणो वा ताम्बूलास्यः सुशीलः शुभवचनवदः स्यात्प्रशस्तोऽत्र दूतः ॥ ३ ॥ संध्याकाले तथा रात्रौ स्नानभोजनसंगमे । विपरीतेषु कालेषु न गच्छेत्तत्र बुद्धिमान् ॥ ४ ॥ न सुप्याद्रोगिसदने न भुञ्जीयात्कदाचन । विनाह्वानं न गच्छेच्च न ब्रूयान्मरणं भिषक् ॥ ५ ॥

## अथ शकुनाः ।

छत्रं गौर्द्विजकन्यकामिषसुरा पण्याङ्गना रोचनं माङ्गल्यं नृपवाजिवारणदधिस्तोत्रादिपाठः शुभः । संगीतं करुणाभयानकमहारौद्रैर्विहीनं स्मरक्रीडाभावमनोहरं किमपि चेद्वालानि सद्योगिनः ॥ १ ॥ मार्गच्छेदोऽहिमार्जारगोधासरटवानरैः । रोगिद्वाराऽभिनिर्गच्छेन्मङ्गलं तदमङ्गलम् ॥ २ ॥ पुंनामा वामतः श्रेष्ठो गजखेचरवर्जितः । स्त्रीनामा दक्षिणे श्रेष्ठः शिवाश्यामाविवर्जितः ॥ ३ ॥ दुर्गा काकस्तथा श्वान उलूकखरजम्बुकाः । निर्गमे वामतः श्रेष्ठाः प्रवेशे दक्षिणाः शुभाः ॥ ४ ॥

## अथ रोगिणामष्टस्थाननिरीक्षणम् ।

रोगाक्रान्तशरीरस्य स्थानान्यष्टौ निरीक्षयेत् । नाडीं मूत्रं मलं जिह्वां शब्दं स्पर्शं दृगाकृती ॥ १ ॥ दोषकोपे घनेऽल्पे च पूर्वं नाडीं परीक्ष्य च । अन्ते चाऽऽदौ स्थितिस्तस्या विज्ञेया भिषजा स्फुटम् ॥ २ ॥ यथा वीणागता तन्त्री सर्वान्रागान्प्रभाषते । तथा हस्तगता नाडी सर्वान्रोगान्प्रकाशयेत् ॥ ३ ॥ सर्वेषामेव रोगाणां निदानं कुपिता मलाः । तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ ४ ॥ निदानार्थकरो रोगो रोगस्याप्युपलक्ष्यते । आदौ सर्वेषु रोगेषु नाडीजिह्वाक्षिमूत्रतः ॥ ५ ॥ परीक्षां कारयेद्वैद्यः पश्चाद्रोगं चिकित्सयेत् । नाड्या मूत्रस्य जिह्वाया लक्षणं यो न विन्दति ॥ ६ ॥ मारयत्याशु वै जन्तुं स वैद्यो न यशो भजेत् । लक्षयित्वा देशकालौ ज्ञात्वा रोगबलाबलम् ॥ ७ ॥ चिकित्सामारभेद्वैद्यो यशः कीर्तिमवाप्नुयात् ॥ ८ ॥

# अथ नाडीपरीक्षा ।

नाडीमङ्गुष्ठमूलाधः स्पृशेद्दक्षिणगे करे । ज्ञानार्थं रोगिणो वैद्यो निजदक्षिणपाणिना ॥ १ ॥ स्थिरचित्तः प्रशान्तात्मा मनसा च विशारदः । स्पृशेदङ्गुलिभिर्नाडीं जानीयाद्दक्षिणे करे ॥ २ ॥ प्रायः स्फुटा भवति वामकरे वधूनां पुंसां च दक्षिणकरे तदियं परीक्षा । ईषद्विनासितकरं वितताङ्गुलीकं बाहुं प्रसार्य रहितं परिपीडनेन ॥ ३ ॥ ईषद्विनम्रकृतकूर्परवामभागे हस्ते प्रसारितसदङ्गुलिसंधिके च । अङ्गुष्ठमूलपरिपश्चिमभागमध्ये नाडीं प्रभातसमये प्रहरं परीक्ष्य ॥ ४ ॥ वारत्रयं परीक्षेत धृत्वा धृत्वा विमोचयेत् । विमृश्य बहुधा बुद्ध्या रोगव्यक्तिं विनिर्दिशेत् ॥ ५ ॥ अङ्गुलित्रितये स्पृष्ट्वा क्रमाद्दोषत्रयोद्भवाम् । मन्दां मध्यगतिं तीक्ष्णां त्रिभिर्दोषैस्तु लक्षयेत् ॥ ६ ॥ वातं पित्तं कफं द्वंद्वं त्रितयं सांनिपातिकम् । साध्यासाध्यविवेकं च सर्वं नाडी प्रकाशयेत् ॥ ७ ॥ स्नायुर्नाडी ततो हंसी धमनी धरणी धरा । तन्तुकी जीवनज्ञाना शब्दाः पर्यायवाचकाः ॥ ८ ॥ सद्यःस्नातस्य भुक्तस्य तथा स्नेहावगाहिनः । क्षुत्तृषार्तस्य सुप्तस्य नाडी सम्यङ्न बुध्यते ॥ ९ ॥ अङ्गुष्ठमूलभागे या धमनी जीवसाक्षिणी । तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥ १० ॥ स्त्रीणां भिषग्वामहस्ते पादे वामे च यत्नतः । शास्त्रेण संप्रदायेन तथा स्वानुभवेन वै ॥ ११ ॥ परीक्षा रत्नवच्चास्यास्त्वभ्यासादेव जायते । वातनाडी भवेद्ब्रह्मा पित्तनाडी च शंकरः ॥ १२ ॥ श्लेष्मनाडी भवेद्विष्णुस्त्रिदेवा नाडिसंस्थिताः । अग्रे वातवहा नाडी मध्ये वहति पित्तला । अन्ते श्लेष्मविकारेण नाडी ज्ञेया बुधैः सदा ॥ १३ ॥ सर्पजलौकादिगतिं वदन्ति विबुधाः प्रभञ्जने नाडीम् । पित्तेन काकलावकमण्डूकादेस्तथा चपलाम् ॥ १४ ॥ राजहंसमयूराणां पारावतकपोतयोः । कुक्कुटस्य गतिं धत्ते धमनी कफसङ्गिनी ॥ १५ ॥ मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा । वातपित्तसमुद्भूतां तां वदन्ति विचक्षणाः ॥ १६ ॥ सर्पहंसगतिं तद्वद्वातश्लेष्मवतीं वदेत् । हरिहंसगतिं धत्ते पित्तश्लेष्मान्विता धरा ॥ १७ ॥ काष्ठकुट्टो यथा काष्ठं कुट्टते चातिवेगतः । स्थित्वा स्थित्वा तथा नाडी संनिपाते भवेद्ध्रुवम् ॥ १८ ॥ वृद्धहारीतात्— स्पन्दते चैकमानेन त्रिंशद्वारं यदा धरा । स्वस्थानेन तदा नूनं रोगी जीवति नान्यथा । स्थित्वा स्थित्वा वहति या सा ज्ञेया प्राणघातिनी ॥ १९ ॥ मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं वा स्थित्वा स्थित्वा वहति धमनी याऽतिसूक्ष्मा च सूक्ष्मा । नित्यं स्कन्धे स्फुरति पुनरप्यङ्गुलीः संस्पृशेद्वा भावैरेवं बहुविधतरैः संनिपातादसाध्या ॥ २० ॥ तस्य मृत्युं विजानीयाद्यस्येदं नाडिलक्षणम् ॥ २१ ॥ पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रतीमत्यन्तं भ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव । भीष्मत्वं दधतीं कलासु पतितां सूक्ष्मत्वमातन्वतीं नो साध्यां धमनीं वदन्ति मुनयो नाडीगतिज्ञानिनः ॥ २२ ॥ गम्भीरा या भवेन्नाडी सा भवेन्मांसवाहिनी । ज्वरवेगेन धमनी सोष्णा वेगवती भवेत् ॥ २३ ॥ कामक्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता । मन्दाग्नेः क्षीणधा-

तोश्च नाडी मन्दतरा भवेत् ॥ २४ ॥ असृक्पूर्णा भवेत्सोष्णा गुर्वी सामा गरीयसी । लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता ॥ २५ ॥ चपला क्षुधितस्यापि तृप्तस्य वहति स्थिरा । मृत्युर्डमरुकस्येव भवेदेकदिनेन च ॥ २६ ॥ कम्पते स्पन्दतेऽत्यन्तं पुनः स्पृशति चाङ्गुलीः । तामसाध्यां विजानीयान्नाडीं दूरेण वर्जयेत् ॥ २७ ॥ स्थिरा नाडी भवेद्यस्य विद्युद्द्युतिरिवेक्ष्यते । दिनैकं जीवितं तस्य द्वितीये मृत्युरेव च ॥ २८ ॥ शीघ्रा नाडी मलोपेता शीतला वाऽथ दृश्यते । द्वितीये दिवसे मृत्युर्नाडी ज्ञेया विचक्षणैः ॥ २९ ॥ मुखे नाडी वहेत्तीव्रा कदाचिच्छीतला वहेत् । आयाति पिच्छिलः स्वेदः सप्तरात्रं न जीवति ॥ ३० ॥ देहे शैत्यं मुखे श्वासो नाडी तीव्रा विदाहवत् । मासार्धं जीवितं तस्य नाडीविज्ञानभाषितम् ॥ ३१ ॥ मुखे नाडी यदा नास्ति मध्ये शैत्यं बहिः क्लमः । यदा मन्दा भवेन्नाडी त्रिरात्रं नैव जीवति ॥ ३२ ॥ अतिसूक्ष्माऽतिवेगा च शीतला च भवेद्यदि । तदा वैद्यो विजानीयाद्रोगिणं च गतायुषम् ॥ ३३ ॥ विद्युद्भ्रमिता नाडी दृश्यते च न दृश्यते । अकालविद्युत्पातेव स गच्छेद्यमशासनम् ॥ ३४ ॥ तिर्यगुष्णा च या नाडी सर्पगा वेगवत्तरा । कफपूरितकण्ठस्य जीवितं तस्य दुर्लभम् ॥ ३५ ॥ चैलाञ्चलितवेगा च नासिकाधारसंयुता । शीतला दृश्यते या च याममध्ये च मृत्युदा ॥ ३६ ॥ दृश्यते चरणे नाडी करे नैवाभिदृश्यते । मुखं विकसितं यस्य तं दूरं परिवर्जयेत् ॥ ३७ ॥ वातपित्तकफाश्चापि त्रयो यस्यां समाहिताः । कृच्छ्रसाध्यामसाध्यां वा प्राहुर्वैद्यविशारदाः ॥ ३८ ॥ वक्रा च चपला शीतस्पर्शा वातज्वरे भवेत् । द्रुता च सरला दीर्घा शीतपित्तज्वरे भजेत् ॥ ३९ ॥ मन्दा च सुस्थिरा शीता पिच्छिला श्लेष्मतो भवेत् । वक्रा च ईषच्चपला कठिना वातपित्तजा ॥ ४० ॥ ईषच्च दृश्यते स्पृष्टा मन्दा स्याच्छ्लेष्मवातजा । सूक्ष्मा शीता स्थिरा नाडी पित्तश्लेष्मसमुद्भवा ॥ ४१ ॥ हंसगा चैव या नाडी तथैव गजगामिनी । मुखं प्रशस्तं च भवेत्तस्याऽऽरोग्यं भवेत्सदा ॥ ४२ ॥ यो रोगिणः करं स्पृष्ट्वा स्वकरं क्षालयेद्यदि । रोगास्तस्य विनश्यन्ति पङ्कः प्रक्षालनाद्यथा ॥ ४३ ॥ इति नाडीपरीक्षा ॥

## अथ मूत्रपरीक्षा ।

अथातः संप्रवक्ष्यामि मूत्रस्य च परीक्षणम् । येन विज्ञातमात्रेण रोगचिह्नं प्रकाश्यते ॥ १ ॥ निशान्त्ययामे घटिकाचतुष्टये उत्थाप्य वैद्यः किल रोगिणं च । मूत्रं धृतं काचमये च पात्रे सूर्योदये तत्सततं परीक्षेत् ॥ २ ॥ तस्याऽऽद्यधारां परिहृत्य मध्यधारोद्भवं तत्परिधारयित्वा । सम्यक्परिज्ञाय गदस्य हेतुं कुर्याच्चिकित्सां सततं हिताय ॥ ३ ॥ वाते च पाण्डुरं मूत्रं सफेनं कफरोगिणः । रक्तवर्णं भवेत्पित्ते द्वंद्वजे मिश्रितं भवेत् । संनिपाते च कृष्णं स्यादेतन्मूत्रस्य लक्षणम् ॥ ४ ॥ अन्यच्च—परीक्षा विधिवत्कार्या रोगिमूत्रस्य तत्त्वतः । तृणेन दापयेत्तैलबिन्दुं तत्रातिलाघवात् ॥ ५ ॥ विकासितं तैलमथाऽऽशु मूत्रे साध्यः स रोगी न विकासितं चेत् । स्यात्कष्टसाध्यस्तलगे त्वसाध्यो नागार्जुनेनैव कृता परीक्षा ॥ ६ ॥

चर्पटतः—नीलं च रूक्षं कुपिते च वायौ पीतारुणं तैलसमं च पित्ते । स्निग्धं कफे पल्वलवारितुल्यं स्निग्धोष्णरक्तं रुधिरप्रकोपे ॥ ७ ॥ मातुलुङ्गरसाभासं सौवीराभं जलोपमम् । प्रपाकरहितानां च सूत्रं चन्दनसंनिभम् ॥ ८ ॥ अजीर्णप्रभवे रोगे सूत्रं तण्डुलतोयवत् । नवज्वरे धूम्रवर्णं बहुमूत्रं प्रजायते ॥ ९ ॥ पित्तानिले धूम्रजलाभमुष्णं श्वेतं मरुच्छ्लेष्मणि बुद्बुदाभम् । तच्छ्लेष्मपित्ते कलुषं सरक्तं जीर्णज्वरेऽसृक्सदृशं च पीतम् । स्यात्संनिपातादपि मिश्रवर्णं तूर्णं विधिज्ञेन विचारणीयम् ॥ १० ॥ पूर्वाशां वर्धते बिन्दुर्यदा शीघ्रं सुखी भवेत् । दक्षिणाशां ज्वरो ज्ञेयस्तथाऽऽरोग्यं क्रमाद्भवेत् ॥ ११ ॥ उत्तरस्यां यदा बिन्दोः प्रसरः संप्रजायते । अरोगिता तदा नूनं पुरुषस्य न संशयः ॥ १२ ॥ वारुण्यां प्रसरेद्बिन्दुः सुखारोग्यं तदाऽऽदिशेत् । ऐशान्यां वर्धते बिन्दुर्ध्रुवं मासेन नश्यति ॥ १३ ॥ आग्नेय्यां तु तथा ज्ञेयं नैर्ऋत्यां प्रसरेद्यदि । छिद्रितश्च भवेत्पश्चाद्ध्रुवं मरणमेव च ॥ १४ ॥ वायव्यां प्रसरेद्बिन्दुः सुधयापि विनश्यति । विकाशितं हलं कूर्मं सैरिभाकारसंयुतम् ॥ १५ ॥ करण्डमण्डलं वापि शिरोहीननरं तथा । गात्रखण्डं च शस्त्रं च खड्गं मुशलपट्टिशम् ॥ १६ ॥ शरं च लगुडं चैव तथैव त्रिचतुष्पथम् । बिन्दुरूपं नरो दृष्ट्वा न कुर्वीत क्रियां क्वचित् ॥ १७ ॥ हंसकारण्डताडागं कमलं गजचामरम् । छत्रं वा तोरणं हर्म्यं सुपूर्णं दृश्यते यदि ॥१८॥ आरोग्यता ध्रुवं ज्ञेया तदा कुर्यात्प्रतिक्रियाम् । तैलबिन्दुर्यदा मूत्रे चालनीसदृशो भवेत् ॥ १९ ॥ कुलदोषो ध्रुवं ज्ञेयः प्रेतदोषसमुद्भवः । नराकारं प्रजायेत किंवा स्यान्मस्तकद्वयम् । भूतदोषं विजानीयाद्भूतविद्यां तदाऽऽचरेत् ॥२०॥ मञ्जिष्ठाभं धूम्रवर्णं च नीलं स्निग्धं मूत्रं वारितुल्यं च शीतम् । ज्ञात्वा चित्ते बुद्धिमान्मानुषाणां कुर्यात्त्वन्तर्भेषजं रोगिणां च ॥ २१ ॥ सर्पाकारं भवेद्वाताच्छत्राकारं तु पित्ततः । मुक्ताकारं बलासात्स्यादेतन्मूत्रस्य लक्षणम् ॥२२॥ इति मूत्रपरीक्षा ॥

## अथ मलपरीक्षा ।

रुद्रतन्त्रात्—वातान्मले तु दृढता शुष्कता चापि जायते । पीतता जायते पित्ताच्छुक्लता श्लेष्मतो भवेत् ॥ १ ॥ संनिपाते च सर्वाणि लक्षणानि भवन्ति हि । त्रुटितं फेनिलं रूक्षं धूमलं वातकोपतः । वातश्लेष्मविकारे च जायते कपिशं मलम् ॥ २ ॥ बद्धं सुत्रुटितं पीतश्यामं पित्तानिलाद्भवेत् । पीतश्वेतं श्लेष्मपित्तादीषत्सान्द्रं च पिच्छिलम् ॥ ३ ॥ श्यामं त्रुटितपीताभं बद्धश्वेतं त्रिदोषतः । दुर्गन्धः शीतलश्चैव विष्ठोत्सर्गो यदा भवेत् ॥ ४ ॥ तदा जीर्णमलं वैद्यैर्दोषज्ञैः परिभण्यते । कपिलं गुटियुक्तं च यदि वर्चोऽवलोक्यते ॥ ५ ॥ प्रक्षीणमलदोषेण दूषितः परिकथ्यते । सितं महत्पूतिगन्धं मलं ज्ञेयं जलोदरे ॥ ६ ॥ श्यामं क्षये श्वामवति पीतं सकटिवेदनम् । अतिकृष्णं चातिशुभ्रमतिपीतं तथाऽरुणम् ॥७॥ मरणाय मलं किंतु भृशोष्णं मृत्यवे ध्रुवम् ॥ अन्यच्च—वातस्य च मलं कृष्णं ततः पित्तस्य पीतविट् । रक्तवर्णं मलं किंचिन्मलं श्वेतं कफोद्भवम् ॥ ८ ॥ आमं वा श्लेष्मजं प्राहुर्मिश्रितं द्वंद्वजं वदेत् । अपक्वं स्यादजीर्णे तु पक्वं स्वच्छमलं

भवेत् ॥ ९ ॥ अल्पाग्नौ पिण्डितं शुष्कं मन्दाग्नौ तु द्रवीकृतम् । दुर्गन्धं चन्द्रिकायुक्तमसाध्यं मललक्षणम् ॥ १० ॥ इति मलपरीक्षा ॥

## अथ शब्दपरीक्षा ।

गुरुस्वरो भवेच्छ्लेष्मा स्फुटवक्ता च पित्तलः । उभाभ्यां रहितो वातः स्वरतश्चैव लक्षयेत् ॥ १ ॥ इति शब्दपरीक्षा ॥

## अथ स्पर्शपरीक्षा ।

पित्तरोगी भवेदुष्णो वातरोगी च शीतलः । श्लेष्मलः स भवेदार्द्रः स्पर्शतश्चैव लक्षयेत् ॥ १ ॥ इति स्पर्शपरीक्षा ॥

## अथ रूपपरीक्षा ।

विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् । स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ॥ १ ॥ प्रायस्त एव पवनाध्युषिता मनुष्या दोषात्मकाः स्फुटितधूसरकेशगात्राः । शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टासौहार्ददृष्टिगतयोऽपि बहुप्रलापाः ॥ २ ॥ पित्तं वह्निर्वह्निजं वा यदस्मात्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्षः । गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ३ ॥ श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो गूढस्निग्धश्लिष्टसंध्यस्थिमांसः । क्षुत्तृड्दुःखशोकक्लेशधर्मैरतप्तो बुद्ध्या युक्तः सात्त्विकः सत्यसंधः ॥ ४ ॥ इति रूपपरीक्षा ॥

## अथ दृक्परीक्षा ।

रूक्षा धूम्रा तथा रौद्रा चला चान्तर्ज्वलत्यपि । दृष्टिर्यदा तदा वातरोगं रोगविदो जगुः ॥ १ ॥ दीपद्वेषि च संतप्तं पीतं पित्तेन लोचनम् । जलार्द्रं ज्योतिषा हीनं स्निग्धं मन्दं कफेन तत् ॥ २ ॥ द्वन्द्वदोषे भवेन्मिश्रं तूर्णं तूर्णं विलोचनम् । श्यामवर्णं च निर्भुग्नं तन्द्रामोहसमन्वितम् ॥ ३ ॥ रौद्रं च रक्तवर्णं च भवेच्चक्षुस्त्रिदोषतः । एकं चक्षुर्यदा भीमं द्वितीयं मीलितं भवेत् ॥ ४ ॥ त्रिभिर्दिनैस्तदा रोगी स याति यममन्दिरम् । ज्योतिर्विहीनं सहसा रोगिणो यस्य लोचनम् ॥ ५ ॥ ईषत्कृष्णं स नियतं प्रयाति यमशासनम् । सरक्तं कृष्णवर्णं च रौद्रं च प्रेक्षते यदा ॥ ६ ॥ इति लिङ्गैर्विजानीयान्मृत्युरेव न संशयः । एकदृष्टिरचैतन्यो भ्रमन्स्फुरिततारकः । एकरात्रेण नियतं परलोकपथं व्रजेत् ॥ ७ ॥ यामलात्—शुष्कास्यः श्यामकोष्ठोऽप्यसितरदततिः शीतनासाप्रदेशः शोणाक्षश्चैकनेत्रो लुलितकरपदः श्रोत्रपातित्ययुक्तः । शीतश्वासोऽथ चोष्णश्वसनसमुदयः शीतगात्रप्रकम्पः सोद्वेगो निष्प्रपञ्चः प्रभवति मनुजः सर्वथा मृत्युकाले ॥ ८ ॥ इति दृक्परीक्षा ॥

## अथाऽऽस्यपरीक्षा ।

वाते च मधुरास्यत्वं पित्ते च कटुकं तथा । मधुराम्लं कफे चैव सर्वलिङ्गं त्रिदोषजे । अजीर्णे घृतपूर्णं स्यात्कषायं चाग्निमान्द्यके ॥ १ ॥ इत्यास्यपरीक्षा ॥

## अथ जिह्वापरीक्षा ।

जिह्वा शीता खरस्पर्शा स्फुटिता मारुतेऽधिके । रक्ता श्यामा भवेत्पित्ते कफे शुभ्राऽतिपिच्छिला ॥ १ ॥ कृष्णा सकण्टका शुष्का संनिपाताधिके तु सा । मिश्रिते मिश्रिता ज्ञेया सर्वलक्षणवर्जिता ॥ २ ॥ इति जिह्वापरीक्षा ॥

## अथ कालज्ञानम् ।

अभ्रैर्लक्षितलक्षणेन[1] पयसा पूर्णेन्दुना भानुना पूर्वादक्षिणपश्चिमोत्तरदिशं षट्त्रिद्विमासैककम् । छिद्रं पश्यति चेत्तदा दशदिनं धूमाकृतिं पञ्चमे ज्वालां पश्यति सद्य एव मरणं कालोचितज्ञानिनाम् ॥ १ ॥ अरुन्धतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च । आयुर्हीना न पश्यन्ति चतुर्थं मातृमण्डलम् ॥ २ ॥ अरुन्धन्ती भवेज्जिह्वा ध्रुवो नासाग्रमेव च । विष्णुस्तु भ्रूद्वयोर्मध्यो भ्रूद्वयं मातृमण्डलम् ॥ ३ ॥ नासाग्रं भ्रूयुगं जिह्वां मुखं चैव न पश्यति । कर्णघोषं न जानाति स गच्छेद्यममन्दिरम् ॥ ४ ॥ नवभ्रूः पञ्चचक्षुश्च सप्तकर्णस्त्रिनासिका । जिह्वां च दिनमेकं तु कालचिह्नं दिने दिने ॥ ५ ॥ अकस्माच्च भवेत्स्थूलो ह्यकस्माच्च कृशो भवेत् । अकस्मादन्यथाभावः षण्मासैश्च विनश्यति ॥ ६ ॥ रसनायां कृष्णभावो मुखं कुङ्कुमसंनिभम् । जिह्वा स्वल्पखरस्पर्शा दुर्लभं तस्य जीवितम् ॥ ७ ॥ स्वेदो ललाटे हिमवन्नरस्य शीतार्दितस्यापि सुपिच्छिलस्य । कण्ठे स्थितो यस्य न याति वक्षो नूनं यमस्यैति गृहं स मर्त्यः ॥ ८ ॥ रात्रौ दाहोऽभितपति दिवा जायते शीतलत्वं कण्ठे श्लेष्मा विरसवदनं कुङ्कुमाकारनेत्रे । जिह्वा कृष्णा वहति च सदा स्थूलसूक्ष्मा च नाडी तद्भैषज्यं स्मरणमधुना रामरामेति नाम्नः ॥ ९ ॥ सौम्या दृष्टिर्वदति विमलं हस्तपादौ सदोष्णौ स्वल्पो दाहः सुरसवदनं कोमला यस्य जिह्वा । नासाश्वासो वहति सरलः स्वेदहीनो ज्वरोऽसौ साध्यो रोगी भवति नियतं वैद्यभैषज्ययोग्यः ॥ १० ॥ इति कालज्ञानम् ॥

## अथ देशाः ।

देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः । अनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः ॥ १ ॥ जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम् । साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ २ ॥ मतान्तरे—देशः प्रचुरपानीयो बहुवृक्षसमाकुलः । बहुवातकफव्याधिरनूप इति कथ्यते ॥ ३ ॥ स्वल्पोदकः स्वल्पवृक्षो बहुपित्तासृगामयः । कथ्यते जाङ्गलो देशस्ताभ्यां साधारणः परः ॥ ४ ॥ इति देशाः ॥

## अथ केषु मासेषु वातादिदोषप्रकोपः ।

मार्गे पौषे तथा माघे आषाढे श्रावणेऽपि च । भाद्रे मासि चिकित्साज्ञैर्वातो राजा प्रकीर्तितः ॥ १ ॥ आश्विने कार्तिके मासे वैशाखज्येष्ठयोर्ध्रुवम् । सर्वशास्त्रविचारज्ञैः पित्तं राजा प्रकीर्तितः ॥ २ ॥ फाल्गुने चैत्रमासे च जन्तुपीडाकरो मतः । शीतलाम्बुसमुद्भूतः श्लेष्मा राजा प्रकीर्तितः ॥ ३ ॥

---

१ इत्थंभूतलक्षणे तृतीया यथा जटाभिस्तापसः.

## अथ केषु ऋतुषु दोषप्रकोपः ।

हेमन्तवर्षाशिशिरेषु वायोः पित्तस्य तोयान्तनिदाघयोश्च । कफस्य कोपः कुसुमागमे च कुर्वीत यद्यद्विहितं तथैव ॥ १ ॥ इति ऋतुदोषप्रकोपः ॥

## अथ वातादिप्रकोपः ।

संधारणाध्यशनजागरणोच्चभाषाव्यायामयानकटुतिक्तकषायरूक्षैः । चिन्ताव्यवायभयलङ्घनशीतशोकैर्वातः प्रकोपमुपयाति घनागमे च ॥ १ ॥ कट्वम्लमद्यलवणोष्णविदाहितीक्ष्णक्रोधातपानलभयश्रमशुष्कशाकैः । क्षाराद्यजीर्णविषमाशनभोजनैश्च पित्तं प्रकोपमुपयाति घनात्यये च ॥ २ ॥ स्वप्नाद्दिवा मधुरशीतलमत्स्यमांसगुर्वम्लपिच्छिलतिलेक्षुपयोविकारैः । स्निग्धातितृप्तिलवणोदकपानभक्ष्यैः श्लेष्मा प्रकोपमुपयाति तथा वसन्ते ॥ ३ ॥

## अथ दोषत्रयकर्माणि ।

पारुष्यसंकोचनतोदशूलश्यावत्वभङ्गव्यथचेष्टभावान् । सुप्तत्वशीतत्वखरत्वशोषान्कर्माणि वायोः प्रवदन्ति तज्ज्ञाः ॥ १ ॥ परिश्रमस्वेदविदाहरागवैगन्ध्यसंक्लेदविपाककोथाः । प्रलापमूर्च्छाभ्रमपित्तदाहाः पित्तस्य कर्माणि वदन्ति तज्ज्ञाः ॥ २ ॥ श्वेतत्वशीतत्वगुरुत्वकण्डूस्नेहोपदेहस्तिमितत्वलेपान् । उत्सेधसंक्लेदचिरक्रियाश्च कफस्य कर्माणि वदन्ति तज्ज्ञाः ॥ ३ ॥

## अथ दोषत्रयशमनम् ।

स्निग्धोष्णस्थिरवृष्यबल्यलवणस्वाद्वम्लतैलातपस्नानाभ्यञ्जनबस्तिमांसमदिरासंवाहनोद्वर्तनम् । स्नेहस्वेदनिरूहनस्यशयनस्थानोपनाहादिकं पानाहारविहारभेषजमिदं वातं प्रशान्तिं नयेत् ॥ १ ॥ तिक्तस्वादुकषायशीतपवनच्छायानिशावीजनज्योत्स्नाभूगृहवारियन्त्रजलजस्त्रीगात्रसंस्पर्शनम् । सर्पिःक्षीरविरेकसेकरुधिरस्रावोपदेहादिकं पानाहारविहारभेषजमिदं पित्तं प्रशान्तिं नयेत् ॥ २ ॥ रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं स्त्रीसेवाध्वनियुद्धजागरजलक्रीडापदाघातनम् । धूमस्तापशिरोविरेकवमनं स्वेदोपनाहादिकं पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं जयेत् ॥ ३ ॥ अन्यच्च—कफं दुर्जनवत्तीक्ष्णैर्वातं स्नेहेन मित्रवत् । पित्तं जामातरमिव मधुरैः शीतलैर्जयेत् ॥ ४ ॥ कफप्रकोपे वमनं सनस्यं विरेचनं पित्तभवे विकारे । वातामये बस्तिविशोधनं च संसर्गजे च प्रविमिश्रमेतत् ॥ ५ ॥

## अथाहर्निशौ दोषत्रयप्रवर्तनम् ।

श्लेष्मा प्रायस्तु पूर्वाह्णे प्रदोषे च प्रवर्तते । पित्तं प्रायस्तु मध्याह्ने क्षपामध्ये प्रवर्तते ॥ १ ॥ अपराह्णेऽनिलः प्रायोऽपररात्रे प्रवर्तते ॥

## अथाऽऽमव्याधिलक्षणम् ।

आलस्यतन्द्राहृदयाविशुद्धिदोषप्रवृत्ताकुलमूत्रभावैः । गुरूदरत्वारुचिसुप्तताभिरामान्वितं व्याधिमुदाहरन्ति ॥ १ ॥

---

१ शरत्.

## अथ तत्प्रतीकारः ।

आमं जयेल्लङ्घनकोष्णपेयालघ्वन्नरूक्षौदनतिक्तयूषैः । निरूहणैः स्वेदनपाचनैश्च संशोधनैरूर्ध्वमधस्तथा च ॥ १ ॥

## अथ वयोविचारः ।

बाल्यमाषोडशाद्वर्षान्मध्यमासप्ततेस्ततः । वृद्धत्वमूर्ध्वं विज्ञेयं वयोमानमिति त्रिधा ॥ १ ॥

## अथ प्रकृतिः ।

अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी । द्रुतगतिरटनोऽनवस्थितात्मा वियति च गच्छति संभ्रमेण सुप्तः ॥ १ ॥ अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसंचयमित्रः । किंचिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः ॥ २ ॥ मेधावी निपुणमतिः प्रगल्भवक्ता तेजस्वी समितिषु दुर्निवारवीर्यः । सुप्तः सन्कनकपलाशकर्णिकारान्संपश्येदपि च हुताशविद्युदुल्काः ॥ ३ ॥ न भयात्प्रणमेदनतेष्वमृदुः प्रणतेष्वपि सान्त्वनदानपरः । भवतीह सदा व्यथितास्यगतिः स भवेदिह पित्तमयप्रकृतिः ॥ ४ ॥ शुक्लाक्षः स्थिरकुटिलालिनीलकेशो लक्ष्मीवाञ्जलदमृदङ्गसिंहघोषः । सुप्तः सन्सकमलहंसचक्रवाकान्संपश्येदपि च जलाशयान्मनोज्ञान् ॥ ५ ॥ रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः । क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः ॥ ६ ॥ द्वयोर्वा तिसृणां वापि प्रकृतीनां तु लक्षणैः । ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिदर्शयेत् ॥ ७ ॥ विषजातो यथा कीटो न विषेण विपद्यते । तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥ ८ ॥ इति प्रकृतयः ॥

## अथाऽऽरोग्यलक्षणम् ।

मङ्गलाचारसम्पन्नः परिवारस्तथाऽऽतुरः । श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ १ ॥ सत्त्वलक्षणसंयुक्तो भक्तिर्वैद्यद्विजातिषु । चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥ २ ॥

## अथ परिभाषा ।

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् । अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥ १ ॥ मानं च द्विविधं प्रोक्तं कालिङ्गं मागधं तथा । कालिङ्गान्मागधं श्रेष्ठमिति मानविदो विदुः ॥ २ ॥ त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशद्भिः परमाणुभिः । त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते ॥ ३ ॥ जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते । षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥ ४ ॥ तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः । यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥ ५ ॥ षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधानकौ । माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ॥ ६ ॥ टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।

क्षुद्रभो वटकश्चैव द्रङ्क्षणः स निगद्यते ॥ ७ ॥ कोलद्वयं तु कर्षः स्यात्स प्रोक्तः पाणिमानिका । अक्षः पिचुः पाणितलं किंचित्पाणिश्च तिन्दुकम् ॥ ८ ॥ बिडालपदकं चैव तथा षोडशिका मता । करमध्यं हंसपदं सुवर्णं कवलग्रहः ॥ ९ ॥ उदुम्बरं च पर्यायैः कर्ष एव निगद्यते । स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिका तथा ॥ १० ॥ शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका । प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते ॥ ११ ॥ पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते । प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्धशरावकः ॥ १२ ॥ अष्टमानं च विज्ञेयं कुडवाभ्यां च मानिका । शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥ १३ ॥ शरावाभ्यां भवेत्प्रस्थश्चतुष्प्रस्थैस्तथाऽऽढकम् । भाजनं कंसपात्रं च चतुःषष्टिपलं च तत् ॥ १४ ॥ चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्मणः । उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञिताः ॥१५॥ द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः । शूर्पाभ्यां च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥ १६ ॥ द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः । चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ १७ ॥ पलानां द्विसहस्रं च भार एकः प्रकीर्तितः । तुला पलशतं ज्ञेया सर्वत्रैवं विनिश्चयः ॥ १८ ॥ माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥ १९ ॥ गुञ्जादिमानमारभ्य यावत्स्यात्कुडवस्थितिः । द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ॥ २० ॥ प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः । मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् ॥ २१ ॥ मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् । विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ॥ २२ ॥ यदौषधं तु प्रथमं यस्य योगस्य कथ्यते । तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चयः ॥ २३ ॥ इति मागधपरिभाषा ॥

## अथ कलिङ्गपरिभाषा ।

स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम् । प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् ॥ १ ॥ यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः कलौ । अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसंमता ॥ २ ॥ यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः । यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ॥ ३ ॥ माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् । स्याच्चतुर्माषकैः शाणः स निष्कष्टङ्क उच्यते ॥ ४ ॥ गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः । चतुष्कर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ॥ चतुष्पलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः ॥ ५ ॥ इति कलिङ्गपरिभाषा ॥

## अथ धान्यादिफलकन्दशाकगुणाः ।

श्वेता रक्ताः स्थूलसूक्ष्मा ये चान्ये शालयः शुभाः । स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ १ ॥ कषायानुरसाः पथ्या लघवो मूत्रला

१ गोधूमशालितुवरीयवयावनाला वार्ताकलङ्कमसुराश्चणकाः कुलित्थाः ॥
मुद्गाः प्रियङ्गुतिलकोद्रवकातसी च श्यामाकमाषचवला इति धान्यवर्गः ॥ १ ॥

१ जोंधळा. २ वाटाणा. ३ लाक. ४ राळे.

हिमाः । षष्टिका व्रीहिषु श्रेष्ठा गौरश्चासितगौरतः ॥ २ ॥ रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः । संधानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ ३ ॥ युगंधरस्त्रिदोषघ्नः स्वादुः पथ्यो रसायनः । मुद्गाढकीमसूरादि शिम्बीधान्यं विबन्धकृत् ॥ ४ ॥ कषायं स्वादु संग्राहि कटुपाकं हिमं लघु । मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ॥ ५ ॥ मुद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् । वातानुलोमी कौलत्थो गुल्मतूनीप्रतूनिजित् ॥ ६ ॥ वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः । चणको वातलस्तद्वत्कुलत्थः कफवातहृत् ॥ ७ ॥ वास्तुकं ग्रहणीकुष्ठत्रिदोषार्शोहरं सरम् । तद्वल्लघुदला चिल्ली काकमाची च मेथिका ॥ ८ ॥ तन्दुलीयो हिमो रूक्षो विषपित्तास्रकास्रजित् । चाङ्गेरी कफवातास्रसंग्रहण्यतिसारजित् ॥ ९ ॥ हृद्यं पटोलं कृमिजित्स्वादु शीतं रुचिप्रदम् । पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ॥ १० ॥ फलं त्रिदोषशमनं मूलं चास्य विरेचनम् । पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥ ११ ॥ कारवेल्लं सतिक्तं स्याद्दीपनं कफजित्परम् । कर्कोटकं ज्वरश्वासदद्रुकुष्ठविषापहम् ॥ १२ ॥ वार्ताकं कफवातघ्नं किंचित्पित्तप्रकोपनम् । सरलं मूत्रलं प्रोक्तं बलकृद्बालमेव तत् ॥ १३ ॥ भेण्डी[१] त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका । बिम्बीफलं स्वादु शीतं स्तम्भनं लेखनं गुरु ॥ १४ ॥ पित्तास्रदाहशोफघ्नं वाताध्मानविबन्धकृत् । कूष्माण्डं बृंहणं शीतं गुरु पित्तास्रवातजित् ॥ १५ ॥ बालं पित्तापहं शीतं मध्यमं कफकारकम् । पक्वं नातिहिमं स्वादु सारकं दीपनं लघु ॥ १६ ॥ बस्तिशुद्धिकरं चेतोरोगदोषत्रयापहम् । मिष्टतुम्बीफलं वृष्यं कफपित्तहरं गुरु ॥ १७ ॥ कटुतुम्बी हिमा हृद्या पित्तकासकफापहा । त्रपुसं[२] मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥ १८ ॥ तत्पक्वमुष्णमम्लं स्यात्पित्तलं कफवातजित् । कोशातकी[३] लघुस्तिक्ता रूक्षाऽऽमाशयशोधिनी ॥ १९ ॥ शोफपाण्डूदरप्लीहकुष्ठार्शःकफपित्तजित् । तत्पत्रं भेदनं शीतं लघु मेहविशोषजित् ॥ २० ॥ शतपुष्पा[४] कटुः स्निग्धा तिक्तोष्णा श्लेष्मवातहा । रुच्या बस्तिहिता नेत्र्या बद्धविट्क्रिमिशुक्रनुत् ॥ २१ ॥ चक्रवर्त्यभिधं[५] शाकं गुणैर्वास्तुकवन्मतम् । सरं शीतं त्रिदोषघ्नं लघु दीपनपाचनम् ॥ २२ ॥ शाकं तु सर्षपोद्भूतं चक्षुघ्नं दाहि रोचनम् । बद्धविड्कं बद्धमूत्रं गुरूष्णं च त्रिदोषकृत् ॥ २३ ॥ कौसुम्भं स्वादु रूक्षोष्णं कफजित्पित्तलं लघु । चणकं शाकमुद्दिष्टं दुर्जरं कफवातकृत् ॥ २४ ॥ शिग्रुस्तीक्ष्णो लघुर्ग्राही वह्निदः कफवातजित् । तीक्ष्णोष्णो विद्रधिप्लीहव्रणघ्नश्चाम्लपित्तजित् ॥ २५ ॥ ग्रन्थान्तरे—मधुशिग्रुः कटुस्तिक्तः शोफघ्नो दीपनः सरः । तत्पत्रं वातपित्तघ्नं चक्षुष्यं स्वादु शीतलम् ॥ २६ ॥ शिग्रुजं कुसुमं स्वादु कफपित्तहरं गुरु । सकषायं गुरु ग्राहि चक्षुष्यं क्रिमिनाशनम् ॥ २७ ॥ सौभाञ्जनफलं स्वादु कषायं कफपित्तजित् । शूलकुष्ठक्षयश्वासगुल्मघ्नं

---

१ जोंधळे. २ कांकडी. ३ शिराळें. ४ शेप. ५ चाकवत.

दीपनं परम् ॥ २८ ॥ आर्द्रा कुस्तुम्बरी कुर्यात्स्वादुसौगन्ध्यहृद्यताः । शुष्का स्निग्धा स्वादुपाका कषाया कटुका लघुः ॥ २९ ॥ कदलीकुसुमं तिक्तं कषायं ग्राहि दीपनम् । उष्णवीर्यं बलासघ्नं तद्गुणं चास्फुटं दलम् ॥ ३० ॥ आगस्त्यपुष्पं शिशिरं चतुर्थज्वरशान्तिकृत् । नक्तान्ध्यनाशनं प्रोक्तं दीपनं श्लेष्मपित्तनुत् ॥ ३१ ॥ सतिक्तं कटुकं पाके कषायं वातलं मतम् । आगस्त्यशिम्बः सदृशो गुणैः पुष्पस्य दुर्जरः ॥ ३२ ॥ शतपत्री तरुण्युक्ता कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥ ३३ ॥ शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः । दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च पाचनी ॥ ३४ ॥ मूलकं बालकं रुच्यं वीर्योष्णं पाचनं लघु । महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदम् ॥ ३५ ॥ सूरणो दीपनो रूक्षः कफार्शःक्रिमिजिल्लघुः । तद्वद्वन्यो विशेषेण कफघ्नो रक्तपित्तकृत् ॥ ३६ ॥ गृञ्जनं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु । संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् ॥ ३७ ॥ शीतलः कदलीकन्दो ग्राही रूक्षोऽस्रपित्तजित् । ईषत्कषायः कफकृद्वातलः प्रदरे हितः ॥ ३८ ॥ रूक्षाऽतिपित्तकृद्गुर्वी वातला गौरवाकुची । तिक्ता नोदरिणां पथ्या ग्रहण्यर्शोविकारनुत् ॥ ३९ ॥ क्षुपजं मरिचं रुच्यं दोषलं सर्वरोगकृत् । विशेषतः प्रमेहार्शोविकारेषु न शस्यते ॥ ४० ॥ बृहन्मरीचं क्षुपजं ततोऽप्यल्पतरं गुणैः । क्षीरा कर्कटिका त्वन्या राजकर्कटिका च सा ॥ ४१ ॥ सुदीर्घा राजिलफला बाणैः कुलककर्कटी । वालुकं श्लेष्मलं स्वादु लघु भेदि च पित्तजित् ॥ ४२ ॥ मधुराम्लरसं पित्तरक्तजित्पक्कमुत्तमम् । अग्निदीप्तिकरं श्वेतं शाकूटममलं सरम् । दुर्नामक्रिमिमेहघ्नं कफपित्तहरं परम् ॥ ४३ ॥ दुर्नामहृच्छ्यामलशाकुटं तु मन्दाग्निविण्मूत्रविबन्धहन्तृ । द्राक्षाबालफलं कटूष्णविशदं पित्तास्रदोषप्रदं मध्यं चाम्लरसं रसान्तरगतं रुच्यातिवह्निप्रदम् । पक्कं चेन्मधुरं तथाऽऽम्लसहितं तृष्णास्रपित्तापहं पक्कं शुष्कतमं श्रमार्तिशमनं संतर्पणं पुष्टिदम् ॥ ४४ ॥ द्राक्षा पक्का सरा शीता चक्षुष्या बृंहणी गुरुः । हन्ति तृष्णाज्वरश्वासवान्तिवातास्रकामलाः ॥ ४५ ॥ कृच्छ्रास्रपित्तसंमोहदाहशोषमदात्ययान् । आमा स्वल्पगुणा गुर्वी सैवाम्ला रक्तपित्तजित् ॥ ४६ ॥ आम्रो ग्राही प्रमेहास्रकफपित्तव्रणाञ्जयेत् । तत्फलं बालमत्यम्लं रूक्षं दोषत्रयास्रकृत् ॥ ४७ ॥ बद्धास्थि तादृगेवोक्तं वातहारि च पित्तलम् । पक्कं तु मधुरं वृष्यं स्निग्धं हृद्यं बलप्रदम् । गुरु वातहरं रुच्यं वर्ण्यं शीतमपित्तलम् ॥ ४८ ॥ संतर्पणो यः सकलेन्द्रियाणां बलप्रदो वृष्यतमश्च हृद्यः । स्त्रीषु प्रहर्षं प्रचुरं ददाति फलाधिराजः सहकार एव ॥ ४९ ॥ रसस्त्वस्य सरः स्निग्धो रोचनो बलवर्णकृत् । आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशकृत् ॥ ५० ॥ आम्रपुष्पमतीसारकफपित्तप्रमेहनुत् । असृग्दोषहरं शीतं रुचिकृद्वातनाशनम् ॥ ५१ ॥ आम्रस्य पल्लवं रुच्यं कफपित्तविनाशनम् । पनसं शीतलं पक्कं स्निग्धं पित्तानिलापहम् ॥ ५२ ॥ बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् । आमं तदेव विष्टम्भि वातलं तुवरं गुरु ॥ ५३ ॥ ईषत्कषायं

मधुरं तद्बीजं वातलं गुरु । तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनम् ॥ ५४ ॥ कदली योनिदोषाश्मरक्तपित्तहरा हिमा । तत्कन्दः शीतलो बल्यः केश्यः पित्तकफास्रजित् ॥ ५५ ॥ तत्फलं मधुरं शीतं विष्टम्भि बलकृद्गुरु । स्निग्धं पित्तास्रहृद्दाहक्षतक्षयसमीरजित् ॥ ५६ ॥ बालं फलं मधुरमम्लमथो कषायं पित्तापहं शिशिररुच्यमथापि नालम् । पुष्पं तदप्यनुगुणं क्रिमिहारि कन्दं पर्णं च शूलशमनं कदलीभवं स्यात् ॥ ५७ ॥ रम्भापक्वफलं कषायमधुरं बल्यं च शीतं तथा पित्तघ्नास्रविमर्दनं गुरुतरं पथ्यं न मन्दानले । सद्यः शुक्रविवर्धनं क्रिमिहरं तृष्णापहं कान्तिदं दीप्ताग्नौ सुखदं कफामयहरं संतर्पणं दुर्जरम् ॥ ५८ ॥ नारीकेलफलं शीतं दुर्जरं बस्तिशोधनम् । विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहजित् ॥ ५९ ॥ तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु । तत्पादपशिरोमज्जा शुक्रला वातपित्तजित् ॥ ६० ॥ विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरपित्तदोषान् । तदप्यजीर्णं गुरु पित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः ॥ ६१ ॥ खर्जूरिकाफलं शीतं स्वादु स्निग्धं क्षुधास्रजित् । बल्यं हन्ति मरुत्पित्तमदमूर्च्छामदात्ययान् ॥ ६२ ॥ तस्मात्स्वल्पगुणं ज्ञेयमन्यत्खर्जूरिकाफलम् । दाडिमं ग्राहि दोषघ्नं हृद्यं रोचनदीपनम् ॥ ६३ ॥ तद्वदामलकं पथ्यं मधुराम्लरसं सरम् । बदरं लघु संग्राहि रुच्यमुष्णं समीरजित् ॥ ६४ ॥ कफपित्तकरं तद्वत्कोमलं गुरु संमतम् । सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् ॥ ६५ ॥ बृंहणं पित्तदाहास्रक्षयतृष्णानिलापहम् । जम्बूफलं ग्राहि रूक्षं कफपित्तव्रणास्रजित् ॥ ६६ ॥ क्षुद्रजम्बूफलं तद्वद्विशेषाद्वातनाशनम् । खर्बुजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ॥ ६७ ॥ स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् । वातामसुष्णं सुस्निग्धं वातहृद्बलशुक्रकृत् ॥ ६८ ॥ अक्षोटं मधुरं बल्यं गुरूष्णं वातहृत्सरम् । सेव्यं समीरपित्तघ्नं बृंहणं कफकृद्गुरु ॥ ६९ ॥ रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत् । शीताफलं तु मधुरं शीतं पित्तविनाशनम् ॥ ७० ॥ हृद्यं बलकरं स्वादु पुष्टिदं स्वल्पवातलम् । रामाह्वयफलं तद्वदीषत्स्वादु च वातकृत् ॥ ७१ ॥ शृङ्गाटं मधुरं रूक्षं गुरु ग्राहि हिमं तथा । शुक्रानिलश्लेष्मकरं शुष्कमार्द्रं विशेषतः ॥ ७२ ॥ विरेचनफलः शाखी श्यामः करभवल्लभः । अर्कार्कः कटुकः पीलुः कषायो मधुराम्लकः ॥ ७३ ॥ रसः स्वादुश्च गुल्मार्शःशमनो दीपनः परः । मधुरस्तु महापीलुर्वृष्यो विषविनाशनः । पित्तप्रशमनो रुच्यो ह्यामघ्नो दीपनः परः ॥ ७४ ॥ सुस्वादु पाकरसयोर्गुरु शीतलं च श्लेष्मामवातकरमञ्जिरमग्निशत्रु ॥ ७५ ॥ आमं तु कैतकं रुच्यं कफपित्तकरं गुरु । अन्नप्रोचकं हृद्यं श्रमक्लमनिबर्हणम् । पक्वं तु पित्तहृत्स्वादुरसमातपदोषनुत् । बीजपूरफलं रुच्यं रसेऽम्लं दीपनं लघु ॥ ७६ ॥ रक्तपित्तहरं ग्राहि जिह्वाहृच्छोधनं परम् । त्वक् तस्य तिक्ता गुर्व्युष्णा क्रिमिवातकफापहा ॥७७॥ तन्मांसं बृंहणं शीतं गुरु पित्तसमीरजित् । केसरो मधुरो ग्राही शूलगुल्मोदरापहः ॥ ७८ ॥ बीजमुष्णं क्रिमिश्लेष्मवातजिद्गर्भदं

गुरु । तत्पुष्पं शीतलं ग्राहि रक्तपित्तहरं लघु ॥ ७९ ॥ मधुकर्कटिका शीता रक्तपित्तहरा गुरुः । कालिङ्गं ग्राहि दृक्पित्तशुक्रहृच्छीतलं गुरु ॥ ८० ॥ नारङ्गमम्लमत्युष्णं रुच्यं वातहरं परम् । कट्वम्लमपरं हृद्यं दुर्जरं वातनाशनम् ॥ ८१ ॥ जम्बीरमम्लं शूलघ्नं गुरूष्णं कफवातजित् । आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीञ्जयेत् ॥ ८२ ॥ अम्लवेतसमत्यम्लं भेदनं शतवेधि च । हृद्रोगशूलगुल्मघ्नं पित्तास्रकफदूषणम् ॥ ८३ ॥ साराम्लमम्लं वातघ्नं गुरु पित्तकफप्रदम् । कर्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफपित्तजित् ॥ ८४ ॥ निम्बूकमम्लं वातघ्नं पाचनं दीपनं लघु । राजनिम्बूफलं स्वादु कफपित्तसमीरजित् ॥ ८५ ॥ मिष्टनिम्बूफलं पित्तवातहृद्गुरु रोचनम् । श्रमतृड्दाहपित्तास्रच्छर्दिक्षयगरापहम् ॥८६॥ अम्लिकाऽऽमा गुरुर्वातहरा पित्तकफास्रजित् । पक्वा तद्वत्सरा रुच्या वह्निबस्तिविशुद्धिकृत् ॥ ८७ ॥ शुष्का हृद्या श्रमभ्रान्तितृष्णाक्लमिहरा लघुः । तिन्तिडीकं समीरघ्नमाममुष्णं परं गुरु ॥८८॥ तत्पक्वं लघुसंग्राहि ग्रहणीकफवातजित् । करमर्दं गुरूष्णाम्लं रक्तपित्तकफप्रदम् ॥ ८९ ॥ तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् । शुष्कं पक्ववदप्यामं पक्वमप्यार्द्रमामवत् ॥ ९० ॥ कपित्थमामं संग्राहि लघु दोषत्रयापहम् । पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित् ॥ ९१ ॥ स्वाद्वम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरम् । आम्रातमामं वातघ्नं गुरूष्णं रुचिकृत्सरम् ॥ ९२ ॥ पक्वं स्वादु हिमं वृष्यं मरुत्पित्तक्षतास्रजित् । पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित् ॥ ९३ ॥ मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् । आर्द्रं तु गुर्वभिष्यन्दि वह्निदृष्टिकरं सरम् ॥ ९४ ॥ स्विन्नं त्रिदोषहृत्सर्वं तद्भेदांस्तद्वदादिशेत् । लशुनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः ॥ ९५ ॥ भग्नः संधानकृत्केश्यो गुरुः पित्तास्रवृद्धिदः । रसायनं कफश्वासकासगुल्मज्वरारुचीः । हन्ति शोफप्रमेहार्शःकोष्ठशूलानिलं कृमीन् ॥ ९६ ॥ तत्पत्रं मधुरं क्षारं नालो मधुरपिच्छिलः ॥ ९७ ॥ पलाण्डुस्तु गुणैस्तुल्यः कफकृन्नातिपित्तलः । अनुष्णः केवलं वातं स्वादुपाकरसैर्जयेत् ॥ ९८ ॥ आर्द्रं पाचनदीपनं रुचिकरं वृष्यं कटूष्णं वरं स्वर्यं मेदहरं कफामयहरं शोफापहं शूलजित् । जिह्वाकोष्ठविशोधनं सलवणं पथ्यं सदा भोजने निम्बूतोयविमिश्रितं रुचिकरं संदीपनं सारणम् ॥९९॥ कुष्ठे पाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे । दाहे निदाघे शरदि नैव पूजितमार्द्रकम् ॥ १०० ॥ शाकेषु सर्वेषु वसन्ति रोगाः सहेतवो देहविनाशनाय । तस्माद्बुधः शाकविवर्जनं हि कुर्यात्तथाम्लेषु स एव दोषः ॥ १०१ ॥

## अथ तमाखुगुणाः ।

धूमाख्यो धूमवृक्षश्च बृहत्पत्रश्च धूसरः । तमाखुर्गुच्छफलको धूमयन्त्रप्रकाशकः ॥ १ ॥ बहुबीजो बहुफलः सूक्ष्मबीजस्तु दीर्घकः । दीर्घं पाटलवर्णं च पुष्पं तस्य प्रकीर्तितम् ॥ २ ॥ तस्य पत्रं तु तीक्ष्णोष्णं कफवातहरं परम् । श्वासकासहरं चैव कोष्ठवातहरं तथा ॥ ३ ॥ वातानुलोमनकरं बस्तिशोधनमुत्तमम् । दन्तरुक्शमनं चैव क्रिमिकण्ड्वादिनाशनम् ॥ ४ ॥ मदपित्तभ्रमकरं

वमनं रेचनं स्मृतम् । दृष्टिमान्द्यकरं चैव तीक्ष्णशुक्रकरं तथा ॥ ५ ॥ तस्यैव धूमपानं तु विशेषाद्धृदि शुक्रहृत् । देशान्तरप्रभेदेन तीक्ष्णं चाऽऽर्तवपित्तलम् ॥ ६ ॥ वमनस्य प्रभावेण वृश्चिकादिविषं हरेत् । रेचनत्वाद्धरेद्वातं श्लेष्माणं च नियच्छति ॥ ७ ॥ इति धान्यादिफलकन्दशाकादिवर्गः ॥

## अथ मांसगुणाः ।

मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः । तत्र जाङ्गललक्षणं गुणाश्च—मांसवर्गेऽत्र जङ्गाला विलस्थाश्च गुहाशयाः ॥ १ ॥ तथा पर्णमृगा ज्ञेया विष्किराः प्रतुदा अपि । प्रसहा अथ च ग्राम्या अष्टौ जाङ्गलजातयः ॥ २ ॥ हरिणैणकुरङ्गमृगादयो जङ्गालाः । गोधाशशभुजंगादयो विलस्थाः । सिंहव्याघ्रवृकर्क्षादयो गुहाशयाः । वानरर्क्षमार्जारादयः पर्णमृगाः । वार्तिकलावतित्तिरविकिरकपिञ्जलादयो विष्किराः । हारीतकपोतसारिकाखञ्जरीटपिकादयः प्रतुदाः । काकोलूकगृध्रशशचिल्लचाषादयः प्रसहाः । प्रसह्य आहृत्य भक्षणात्प्रसहाः । छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता महर्षिभिः ॥ ३ ॥ इत्यष्टौ जाङ्गलाः ।

## अथानूपजातिलक्षणं तद्गुणाश्च ।

कूलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा । मत्स्या एतेऽत्र विख्याताः पञ्चधाऽनूपजातयः ॥ १ ॥ महिषा गण्डवाराहाश्चमरीवारणादयः । एते कूलेचराः प्रोक्ता यस्मात्कूले चरन्त्यपाम् ॥ २ ॥ हंससारसबकबृहद्बककौञ्चादयः प्लवसंज्ञकाः । शुक्तिशङ्खशम्बूकादयः कोशस्थाः । कूर्मनक्रघण्टिकाशिशुमारककर्कटादयः पादिनः । रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकीर्तिताः ॥ ३ ॥ इत्यनूपजाः पञ्च ।

## अथ जाङ्गलमांसगुणाः ।

एणमांसं हिमं रुच्यं ग्राहि दोषत्रयापहम् । षड्रसं बलदं पथ्यं लघु रूक्षं ज्वरास्रजित् ॥ इति हरिणः ॥ १ ॥ चित्राङ्गो वातुलः कश्चिन्मधुरो बलवर्धनः । तद्वच्छम्बरमांसं तु वृष्यं दोषत्रयापहम् ॥ इति चितलसांबरा ॥२॥ शशः शीतो लघुः स्वादुर्ग्राही पथ्योऽग्निदीपनः । संनिपातज्वरश्वासरक्तपित्तकफापहः ॥ इति शशः ॥ ३ ॥ गोधाऽनिलहरा बल्या वृष्या मेध्या च कीर्तिता । मूषको बद्धविण्मूत्रो बल्यो वृष्योऽनिलापहः ॥ ४ ॥ सल्लकः श्वासकासास्रशोषदोषत्रयापहः । सेधा तथैव विज्ञेया विशेषाद्बलवर्धिनी ॥ इति सारसः ॥ ५ ॥ शृगालो बलदो वृष्यः सर्ववातक्षयापहः । वानरः पवनश्वासमेदःपाण्डुक्रिमीञ्जयेत् ॥ इति जम्बूकवानरः ॥ ६ ॥ वार्तिको मधुरः शीतो रूक्षश्च कफवातजित् । पारावतो गुरुः स्वादुः कषायो रक्तपित्तहा ॥ इति वार्तिकपारावतः ॥७॥ चटकः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः । संनिपातहरो वेश्मचटकः शुक्रलः परः ॥ इति चिमणी ॥ ८ ॥ लावा वह्निकराः स्निग्धा मधुरा ग्राहिणो हिमाः । पांशुलः श्लेष्मलस्तेषु वीर्योष्णो-

ऽनिलनाशनः ॥ ९ ॥ गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् । पौण्ड्रकः पित्तकृत्किंचिल्लघुर्वातकफापहः ॥ १० ॥ दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः । इति लावा चतुर्विधः ॥ तित्तिरः कृष्णवर्णः स्यात्स तु गौरः कपिञ्जलः ॥ ११ ॥ तित्तिरो वर्णदो ग्राही हिक्कादोषत्रयापहः । श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः ॥ इति तित्तिरः तिटपा ॥ १२ ॥ मयूरमांसं सुस्निग्धं वातघ्नं शुक्रवर्धनम् । बल्यं मेधाकरं प्रोक्तं चक्षूरोगविनाशनम् ॥ १३ ॥ सेव्यं मयूरजं मांसं हेमन्ते शिशिरे मधौ । न शरद्ग्रीष्मयोः पथ्यं वर्षास्वपि हितं न च ॥ इति मयूरः ॥१४॥ स्वादुः कषायश्च लघुः कपोतः कफपित्तहा । शुक्रो बल्योऽतिवृष्यश्च वीर्यवृद्धि-करः परः इति होरावा ॥ १५ ॥ कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलजिद्गुरुः । चक्षुष्यः शुक्रकफकृद्वन्यो हृद्यः कफान्तकः ॥ १६ ॥ पानीयकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः ॥ इति कुक्कुटः ॥ छागमांसं गुरु स्निग्धं लघुपाकं त्रिदोषजित् ॥१७॥ अदाहि बृंहणं नातिशीतं पीनसनाशनम् । देहधातुसमानत्वादनभिष्यन्दि बृंहणम् ॥१८॥ तत्रापि कोमलच्छागमांसं पथ्यं त्रिदोषजित् ॥ इति छागमांसम् ॥ मेषमांसं गुरु स्निग्धं बल्यं पित्तकफप्रदम् । मेदःपुच्छ्यामदं वृष्यं कफपित्तकरं गुरु ॥ इति मेढामेढी ॥ १९ ॥ इति जाङ्गलमांसानि ॥

## अथानूपमांसगुणाः ।

सौकरं पित्तलं स्वादु बल्यं वातापहं गुरु । मधुरं सृष्टविण्मूत्रं वातपित्ता-स्रनाशनम् ॥ १ ॥

## अथ मत्स्यादिजलजन्तवः ।

मोरिका वातहृद्बल्या बृंहणी मधुरा गुरुः । पित्तहृत्कफकृद्रुच्या वृष्या दीप्ता कृशे हिता ॥ इति मोरी ॥ १ ॥ शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरश्च सः ॥ इति सरंगः ॥ २ ॥ बाम्बमत्स्यो हरेद्वातपित्तं रुचिकरो लघुः । शकुली ग्राहिणी हृद्या मधुरा तुवरा स्मृता ॥ इति बोंबिलविखणः ॥ ३ ॥ कविका मधुरा स्निग्धा कषाया रुचिकारिणी । किंचित्पित्त-करी वातनाशिनी बलवर्धिनी ॥ इति कर्ली ॥ ४ ॥ गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृद्वह्निदीपनी बलवीर्यकृत् ॥ इति सेवटे ॥ ५ ॥ मद्गुरो वातहृद्वृष्यो बल्यः कफकरो लघुः ॥ इति सुडदसा ॥ मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो गुरुः ॥ इति मत्स्यगर्भः ॥ ६ ॥ दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्धनः ॥ इति दग्धमत्स्यः ॥ महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः ॥ ७ ॥ शिशिरो मधुरो रुच्यो वाते साधारणः स्मृतः । क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः ॥ ८ ॥ लघुपाका रुचिकराः सर्वदा ते हिता मताः । अति-सूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ॥ ९ ॥ नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः । वाप्या वृष्याः कफाष्ठीलामूत्रकृच्छ्रविबन्धदाः ॥ १० ॥ ताडागा गुरवो वृष्याः शीतला बलमूत्रदाः । सरोजा मधुराः स्निग्धा बल्या वातनिबर्हणाः ॥ ११ ॥ सामुद्रा गुरवो नातिपित्तलाः पवनापहाः । तत्रापि

लवणाम्भोजा ग्राहिणो दृष्टिनाशनाः ॥ १२ ॥ ह्रदोद्भवा बलकरास्ते तु स्वच्छजलोद्भवाः । हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः ॥ १३ ॥ वसन्ते तु नदीजाता ग्रीष्मे ह्रदसमुद्भवाः । तडागजाता वर्षासु तास्वपथ्या नदीभवाः ॥ १४ ॥ नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ॥ इति मत्स्यगुणाः ।

## अथ शङ्खादिगुणाः ।

शङ्खो वराटकश्चैव शुक्तिशम्बूकभल्लुकाः । जीवाश्चैवंविधाः सर्वे कोशस्थाः परिकीर्तिताः ॥ १ ॥ कोशस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः । बृंहणाश्च तथा वृष्या वर्चस्याः कफवर्धनाः ॥ २ ॥ कर्कटो बृंहणो वृष्यः शीतलोऽसृग्गदापहः । कच्छपो बलदः स्निग्धो वातघ्नः पुंस्त्वकारकः ॥ इत्यानूपमांसानि ॥ ३ ॥

## अथ सिद्धान्नादिपाकगुणकथनम् ।

अथ भक्तम्—जले चतुर्दशगुणे तण्डुलानां चतुष्पलम् । विपचेत्स्रावयेन्मण्डं स भक्तो मधुरो लघुः ॥ १ ॥ अत्युष्णं बलहृद्भक्तं शीतं शुष्कं च दुर्जरम् । अतिक्लिन्नं ग्लानिकरं दुर्जरं तण्डुलान्वितम् ॥ २ ॥ अतिद्रवं तु यद्भक्तं श्वासकासाग्निपीनसैः । हरेद्वर्णबलं ज्ञेयं शकृद्वातनिरोधकृत् ॥ इति भक्तम् ॥३॥ तक्रसिद्धं तु यद्भक्तं ग्रहण्यर्शःश्रमापहम् । वातघ्नं बलदं श्लेष्मपित्तरक्ताभिवर्धनम् ॥ इति तक्रसिद्धभक्तं ॥ ४ ॥ भृष्टतण्डुलजं भक्तं रुचिकृत्कफजिल्लघु । वातपित्तहरं ग्राहि ज्वरयक्ष्मातिसारनुत् ॥ इति भृष्टतण्डुलभक्तं ॥५॥ यथोचिते जले धौतांस्तण्डुलान्विपचेत्सुधीः । मण्डं संस्राव्य सर्पिस्तु तत्र किंचिद्विनिक्षिपेत् ॥६॥ ज्वलन्तमेकमङ्गारं तदुपर्यर्पयेदथ । घटिकानन्तरं दर्व्योपरिभागं विनिर्हरेत् ॥७॥ भक्तं विभक्तमेतत्तु राजयोग्यं मनोहरम् ॥ अथ यवागूः—यवागूः षड्गुणैस्तोयैः संसिद्धा विरलद्रवा ॥ ८ ॥ यवागूर्ग्राहिणी तृष्णाज्वरघ्नी बस्तिशोधनी ॥ अथ विलेपी—चतुर्गुणे तु संसिद्धा विलेपी घनसिक्थका ॥ ९ ॥ विलेपी दीपनी बल्या हृद्या संग्राहिणी लघुः । व्रणाक्षिरोगिणां पथ्या तर्पणी तृड्ज्वरापहा ॥ १० ॥ आमशूलहरा स्वादुर्दीपनी रुचिपुष्टिकृत् ॥ इति विलेपी ॥अथ पेया—पेया सिक्थान्विता तोये चतुर्दशगुणे कृता ॥ ११ ॥ पेया कुक्षिगदक्लान्तिज्वरस्तम्भातिसारजित् । रुच्यग्निकृल्लघुर्दोषमलस्वेदानुलोमनी ॥ १२ ॥ अथ मण्डः—मण्डश्चतुर्दशगुणे सिद्धस्तोये त्वसिक्थकः । मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत् ॥ १३ ॥ स्रोतोमार्दवकृत्पित्तज्वरश्लेष्मश्रमापहः । वाट्यमण्डो यवैर्भृष्टैर्लाजमण्डस्तु शालिभिः ॥ १४ ॥ वाट्यमण्डो लघुर्ग्राही शूलदाहत्रिदोषनुत् । नवज्वरेऽपि पथ्योऽयं पटोलमगधान्वितः ॥ १५ ॥ लाजमण्डो लघुर्ग्राही हृद्यः पाचनदीपनः । अतीसारग्रहण्यर्शोरोचकारुक्त्रिदोषनुत् ॥ १६ ॥

## अथाष्टगुणमण्डः ।

तण्डुलैरर्धमुद्गांशैः किंचिद्भृष्टैः सुपाचितैः । हिङ्गुसिन्धूत्थधनिकातैलत्रिक-

दुसंस्कृतः ॥ १ ॥ ज्ञेयः सोऽष्टगुणो मण्डो ज्वरदोषत्रयापहः । रक्तक्षुद्वर्धनः प्राणप्रदो बस्तिविशोधनः ॥ २ ॥

## अथ साराणि ।

सारं भोजनसारं सारं सारङ्गलोचनाधरतः । पिब खलु वारंवारं नो चेन्मुधा भवति संसारः ॥ १ ॥ अम्लिकायाः पलं पक्कं प्रस्थे नीरे विनिक्षिपेत् । अर्धावशिष्टे पूते च मरीचार्धफलं तथा ॥ २ ॥ सैन्धवं जरणं हिङ्गु यथायोग्यं प्रकल्पयेत् । श्लक्ष्णपिष्टकृतं सर्वं तस्मिंस्तोये विनिक्षिपेत् ॥ ३ ॥ कालशाकेन संयोज्य चाऽऽर्द्रां कुस्तुम्बरीं भिषक् । पुनः पाकं विधायाथ यथाकालं च सेवयेत् ॥ ४ ॥ अम्लिकाफलसंभूतं सारं वातविनाशनम् । पित्तश्लेष्मकरं किंचित्सुरुच्यं वह्निबोधकम् ॥ ५ ॥

## अथ यूषाः ।

वैदलयूषः—यूषः स्मृतो वैदलानामष्टादशगुणेऽम्भसि । यूषो बल्यो लघुः पाके रुच्यः कण्ठकफापहः ॥ १ ॥ अथ मुद्गयूषः—मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः । व्रणोर्ध्वजत्रुरुग्दाहकफपित्तज्वरास्रजित् ॥ २ ॥ दाडिमामलकाभ्यां तु मुद्गयूषः सुसाधितः । पित्तवातहरः पथ्यो लघुरग्निप्रदः सरः ॥३॥ अथ मुद्गामलकयूषः—मुद्गामलकयूषस्तु भेदनः कफपित्तजित् । तृड्दाहशमनः शीतो मूर्च्छाभ्रममदापहः ॥ ४ ॥ अथ कुलित्थयूषः—कुलित्थयूषो गुल्मार्शःकफवाताश्मशर्कराः । तूनीप्रतूनीमेदांसि मेहं हन्त्यग्निकृत्सरः ॥५॥ तथ चणकयूषः—चणकैर्विहितो यूषोऽनुष्णस्तुवरको लघुः । रक्तपित्तप्रतिश्यायकासपित्तकफापहः ॥६॥ अथ मकुष्ठयूषः—मकुष्ठयूषः संग्राही पित्तश्लेष्मज्वरापहः । लघुः संतर्पणः पथ्यो हृद्यः पीनसकासजित् ॥ ७ ॥ अथ मसूरयूषः—मसूरयूषः संग्राही बृंही स्वादुः प्रमेहजित् । तथा कषायो मधुरश्च यूषो विशोषणो वातहृदाढकीनाम् । पित्तापहः श्लेष्महरो ज्वराणां कृमीन्निहन्याद्गुददारणं च ॥ ८ ॥ इति यूषाः ।

## अथागस्तिसारः ।

अगस्तिसारः सुस्वादुस्तिक्तो वायुकफप्रणुत् । पाण्डुशोफारुचिप्लीहगुल्मशूलगदापहः ॥ १ ॥ इत्यगस्तिसारः ।

## अथ सूपाः ।

मुद्गसूपो लघुर्ग्राही कफपित्तहरो हिमः । स्वादुर्नेत्र्योऽनिलहरः कुल्माषाः शुक्रवर्धनाः ॥१॥ माषसूपश्च कुल्माषः स्निग्धो वृष्योऽनिलापहः । उष्णः संतर्पणो बल्यः सुस्वादू रुचिकारकः ॥ २ ॥ आढकीसूप उद्दिष्टः श्लेष्मपित्तहरो हिमः । किंचित्कषायो रुचिकृत्साज्यो दोषत्रयप्रणुत् ॥ ३ ॥ चाणकः सूप आख्यातो रोचनः पाचनः परः । बलासपित्तनुद्बल्यो रक्तजिन्नातिवातलः ॥ ४ ॥ मकुष्ठसूपोऽल्पबलः पाचनो दीपनो लघुः । चक्षुष्यो बृंहणो वृष्यः पित्तश्ले-

स्रास्त्ररोगनुत् ॥ ५ ॥ मसूरसूपः संग्राही शीतलो मधुरो लघुः। कफपित्तास्र-जिद्वर्ण्यो विषमज्वरनाशनः ॥ ६ ॥ राजमाषभवः सूपः स्वादू रूक्षः कषायकः। ग्राही गुरुर्वातकरः स्तन्यकृद्रुचिकारकः ॥ ७ ॥ निष्पावसूपः पित्तास्र-मूत्रस्तन्यानिलप्रदः। विदाह्युष्णो गुरुः शोफकफकृच्छुक्रलः सरः ॥ ८ ॥ कुलत्थसूपो वातघ्नः कटुः पाके कषायकः। कफाविरोधी पित्तास्रकरोष्णः श्वासकासनुत् ॥ ९ ॥ इति सूपाः।

## अथ पर्पटाः।

पटु[1]जीरकबाह्लीक[2]स्वर्जिकामरिचान्विताः। अरोचकजिगीषूणां पर्पटाः पुरतो भटाः ॥ १ ॥ माषजाः पर्पटा बल्या रोचनाः पाचनाः सराः। गुरवो रक्तपित्ताग्निकफदा बहुवर्चसः ॥ २ ॥ मुद्गजाः पर्पटाः पथ्या ज्वराक्षिश्रवणामये। अरोचकच्छिदः स्निग्धा लघवो दोषनाशनाः ॥ ३ ॥ इति पर्पटाः।

## अथ मुद्गतण्डुलकृशरा।

मुद्गतण्डुलजा ज्ञेया कृशराऽल्पबला लघुः। भक्ततो दुर्जरा बल्या पुष्टिकृत्तर्पणी हिमा ॥ इति मुद्गतण्डुलकृशरा ॥ १ ॥ तण्डुलैर्मौक्तिकाकारैः कण्डितैर्न च खण्डितैः। चतुर्थभागैर्माषस्य वैदलैः परिमिश्रितैः ॥ २ ॥ यथोचिताम्बुसंसिद्धैः सहिङ्गुलवणार्द्रकैः। सुस्नेहा कामिनीवेयं कृशरा शिशिरे हिता ॥ ३ ॥ कृशरा दुर्जरा बल्या गुर्वी वातविनाशिनी। बलपुष्टिमलश्लेष्मपित्तरेतःप्रदा सरा ॥ ४ ॥ इति माषतण्डुलकृशरा।

## अथ पायसम्।

अर्धावशिष्टे क्वथनाद्दुग्धेऽष्टांशांश्च तण्डुलान्। पचेन्नातिद्रवघनं परमान्नमिदं स्मृतम् ॥ १ ॥ पायसं दुर्जरं बल्यं धातुपुष्टिप्रदं गुरु। शुक्रलं मधुरं पाके पित्तघ्नं बृंहणं सरम् ॥ इति तण्डुलपायसम् ॥ २ ॥ गोधूमपायसं बल्यं मेदःकफकरं गुरु। शीतलं पित्तशमनं वातकृच्छुक्रवर्धनम् ॥ ३ ॥ इति गोधूमपायसम्।

## अथ पोलिका।

गोधूमपोलिका बल्या कफहा वातनुद्गुरुः। शुक्रला मधुरा पाके पित्तघ्नी बृंहणी सरा ॥ १ ॥ गोधूमचूर्णं वस्वंशचणकक्षोदमिश्रितम्। यवानीहिङ्गुलवणैः किंचिदाज्यैश्च मर्दितम् ॥ २ ॥ संमर्द्य चक्रिकास्तस्य कार्या निम्नास्तु मध्यतः। निर्धूमाङ्गारसंभृष्टा अदग्धास्ताम्ररोचिषः ॥ ३ ॥ अङ्गारकर्करी बल्या बृंहणी शुक्रला लघुः। दीपनी कफहृद्रोगपीनसश्वासवातनुत् ॥४॥ इति गोधूमपोलिका।

मण्डको लघुरुष्णस्तु पथ्यो दोषत्रयापहः। रेतःपुष्टिप्रभादृष्टिप्रदः स्निग्धश्च बृंहणः ॥ ५ ॥ (इति मांडा)

---

१ पटु लवणं. २ बाल्हीकं हिङ्गु.

## अथाङ्गारिकाः ।

मर्दिता दृढपाणिभ्यां शर्कराघृतसंयुता । अङ्गारिका महावृष्या वातपित्तहरा गुरुः ॥ १ ॥ ( मलिदा )

## अथ वटकाः ।

लवणमरिचहिङ्गुश्रृङ्गवेरैः समुपचितो वरमाषजः सुपक्वः । अतिसुरभिघृतेऽथवा सुतैले विशति मुखे वटकः सुपुण्यभाजाम् ॥ १ ॥ पवनारुचिदैन्यजयोद्भटकाः क्षपितार्दितकम्पमरुत्कटकाः । रसनातलरङ्गधरानटकाः कफपित्तविकारकरा वटकाः ॥ २ ॥ अथ काञ्जिकवटकः—बाह्लीकधूपयुतनिर्मलवारिपूर्णे कुम्भे यथोचितपटूत्तमराजिकाद्यैः । संधूपिताः कतिविधानि दिनानि रुच्या वातघ्नकाञ्जिकवटाः कफपित्तलाः स्युः ॥ इति कांजीवटकः ॥ ३ ॥ मुद्गवटी गुरू रुच्या वातपित्तास्रदा मता । श्लेष्मला पुष्टिबलकृच्छुक्रला मृदुलाऽल्पतृट् ॥ इति मुद्गवटकः ॥ ४ ॥ वैदलैश्चाणकैः स्विन्नैः सगुडैः सूक्ष्मपेषितैः । किंवा सलवणाजाजिहिङ्गुभिः पूरणीकृतैः ॥ एतैर्भृताश्च तलिताः कृतगोधूमपूरिकाः ॥ ५ ॥ पूरिका मधुरा बल्याः श्रमवातामयापहाः ॥ ६ ॥ शुक्रला बृंहणी श्वासपथ्या हृद्रोगनाशिनी । इयं सलवणा लघ्वी श्लेष्मवातविनाशिनी ॥७॥ इति वैदलपूरिका । सुशालिपिष्टं घनदुग्धमिश्रितं सशर्करं वस्त्रसुपूतमेतत् । घृते सुपक्वं पृथुलीकृतं बुधैर्निगद्यते शालिजघेवरोऽयम् ॥ इति शालिजघेवरः ॥ ८ ॥ माषपिष्ट्यथवा मुद्गपिष्टी सपटुरामठा । जीरकार्द्रकसंयुक्ता पिण्डिता मुष्टिमात्रया ॥ ९ ॥ तृणाम्बुगर्भिते पात्रे सुस्विन्ना तलिता ततः । खादयेदिण्डरीं शुष्कां किंवाऽऽम्लाद्यैः प्रलोडिताम् ॥ १० ॥ माषेण्डर्युदिता बल्या रोचिकाऽनिलजिद्गुरुः । शुक्रला बृंहिणी चाथ मुद्गजा स्वल्पजा लघुः ॥ ११ ॥ शालिपिष्टकृता भक्ष्या नातिबल्या विदाहिनः । अवृष्या गुरुवश्चोष्णाः कफपित्तप्रकोपणाः ॥ १२ ॥ गोधूमविहिता भक्ष्या बल्याः पित्तानिलापहाः । वैदला वातला भक्ष्या गुरवस्तुवरा हिमाः ॥ १३ ॥ माषपिष्टकृता भक्ष्या बल्याः पित्तकफप्रदाः । इति पिष्टभक्ष्यगुणाः ॥

घृतपाचितभक्ष्यास्तु बल्याः पित्तानिलापहाः । तैलजा दृक्समीरघ्ना उष्णाः पित्तास्रदूषणाः ॥ १ ॥ दुग्धालोडितगोधूमशालिपिष्टादिनिर्मिताः । वातपित्तहरा भक्ष्या हृद्याः शुक्रबलप्रदाः ॥ २ ॥ इति स्नेहपाचितभक्ष्यगुणाः ।

## अथ पानकानि ।

द्राक्षाम्लिकापरूषादिजलं खण्डादिमिश्रितम् । मरीचार्द्रककर्पूरचातुर्जातादिसंस्कृतम् ॥ १ ॥ पानकं द्विविधं तत्स्यादम्लानम्लविभेदतः । पानकं मूत्रलं हृद्यं प्रीणनं तृट्श्रमापहम् ॥ २ ॥ यथाद्रव्यगुणात्तत्तु गुरुलघ्वादि निर्दिशेत् । द्राक्षादिपानकं हृद्यं मूत्रलं तृट्श्रमापहम् ॥ ३ ॥ पित्तवातक्लमच्छर्दिदाहमोहमदप्रणुत् । परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥ ४ ॥ अपक्वाम्र-

सोद्धृतं पानकं वातनाशनम् । कफपित्तकरं किंचित्प्रत्यहं यदि पीयते ॥ ५ ॥ पक्वाम्रसंभवं तत्तु कदुष्णं गुरु पित्तकृत् । रुचिदं श्लेष्मलं बल्यं वर्ण्यं वृष्यं तु वातनुत् ॥ ६ ॥ धान्यकल्कसिताजातं पानकं शशिवासितम् । शीतं परं पित्तहरं मूत्रकृच्छ्रविनाशनम् ॥ ७ ॥ भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् । लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥ ८ ॥ निम्बूफलभवं पानमत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥ ९ ॥ इति पानकानि ।

## अथ रागखाण्डवाः ( मोरांबे । )

आममाम्रं त्वचा हीनं द्विस्त्रिर्वा खण्डितं ततः । भृष्टमाज्ये मनागस्तं[1] खण्डपाकेऽथ युक्तितः ॥ १ ॥ सुपक्वं च समुत्तीर्य मरीचैलेन्दुवासितम् । स्थापितं स्निग्धमृद्भाण्डे रागखाण्डवसंज्ञितम् ॥ २ ॥ पुष्टिदो बलदः पित्तवातास्ररुचिनाशनः । स्निग्धो गुरुस्तर्पणश्च सुस्वादू रागखाण्डवः ॥ ३ ॥ इति रागखाण्डवः ॥ सितारुचक[2]सिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः ॥ ४ ॥ खाण्डवा मधुराम्लादिरससंयोगसंभवाः । दीपना बृंहणा रुच्यास्तीक्ष्णा हृद्याः श्रमापहाः ॥ इति नानाखाण्डवाः ॥ ५ ॥

## अथ रसाला शिखरिणी ( श्रीखण्ड )

दधिबद्धं तुल्यसितं त्वर्धपयो गालितं शनकैः । मरिचैलाशशिसहितं भवति रसालाभिधं लोके ॥ १ ॥ अन्यच्च—ससितं दधिमध्वाज्यमरिचैलादिसंस्कृतम् । मथितं कान्तकामिन्या कर्पूरपरिवासितम् ॥ २ ॥ रसाला शिखरिण्युक्ता मार्जारी मार्जिका बुधैः । रसाला शुक्रला बल्या रोचना वातपित्तजित् ॥ ३ ॥ स्निग्धा गुरुः प्रतिश्यायं विशेषेण विनाशयेत् ।

## अथ भरित्थम् ।

लवणमरिचचूर्णेनाऽऽवृतं रामठाढ्यं दहनवदनपक्वं निम्बुतोयेन युक्तम् । हरति पवनसंघं श्लेष्महन्तृ प्रसिद्धं जठरभरणयोग्यं चारुभोज्यं भरित्थम् ॥ १ ॥ अथार्द्रकम्—धौतं खण्डितमार्द्रकं च सलिलैः क्षिप्तं सुतप्ते घृते सिन्धूत्थं मरिचं सुजीरयुगलं चूर्णीकृतं प्रक्षिपेत् । चूर्णं भृष्टचणोद्भवं च वितुषं हिङ्ग्वाज्यधूमे दहेदित्थं दोषविहीनमार्द्रकवरं सुस्वादु संजायते ॥ २ ॥ इत्यार्द्रकम् ।

## अथ पृथुकादयः ।

पृथुका गुरवो बल्याः श्लेष्मला वातनाशनाः । दुर्जराः शुक्ररुचिदा आमविष्टम्भकारिणः ॥ इति पृथुकाः ॥ १ ॥ लाजा लघुतराः शीता बल्याः पित्तकफच्छिदः । वम्यतीसारदाहास्रमेदोमेहतृषापहाः ॥ इति लाजाः ॥ २ ॥ शिम्बी-

---

१ अस्तं प्रक्षिप्तं । २ रुचकं सौवर्चलं ।

